अथेति ॥ स विष्णुः काले यथोचितावसरे करणमात्रिकान् अधिकारिणोऽर्थानपेक्षान् उत्कोचादिशुद्धान्, पौरान्नगरवासिनोऽङ्गहारान्नर्तकान् निःस्पृहान्, नम्रीभवच्चरणनितम्बहस्तान् अद्राक्षीत् ॥

ततसारतमास्थासु सुभावानभितारधीः ।
धीरताभिनवाभासु सुस्थामा तरसातत ॥ १४३ ॥

(गतप्रत्यागतम्)

ततेति ॥ अभितारधीः अभिगता तारा धीर्यस्येति सकलशास्त्ररसरसिकबुद्धिः, सुस्थामा बलीयान् स विष्णुः धीरतानिनवाभासु निःक्षोभतरुणप्रतापासु ततसारतमास्थासु विस्तृतसारतमप्रतिज्ञासु सुभावान् सुष्ठुपरिणामान् आतत विस्तृतवान् ॥

क्षयलोभविरागहेतवः प्रकृतीनाममवन्न यत्र यः ।
रिपुमध्यकृतास्य केवलं परवध्वः परकीयतां ययुः ॥ १४४ ॥

क्षयेति ॥ यत्र विष्णौ राजनि सति प्रकृतीनां दुर्गधर्मकर्माध्यक्षसेनापतिपुरोहितमन्त्रिदैवज्ञलक्षणानां क्षयलोभविरागहेतवः क्षयो बलाभावः, लोभः सर्वपदार्थेषु स्पृहा व्यामोहो वा, विरागोऽनुरागाभावः, त एव हेतवो न अभवन् । क्षीणा हि प्रकृतिरकिंचित्करा जायते पतिं प्रसते लुब्धाहिरपत्यमिव, विरक्ता राज्यसमापनाय जायते इति । एतेन राजनि प्रकृतिस्वाधीनता कथिता । तथा यो विष्णू रिपुं शत्रुम् अध्यकृत स्वाधीनीकृतवान् । केवलम् अस्य विष्णोः परवध्वः शत्रुनार्यः परकीयतां पराधीनतां ययुः, तत्पतीनां मृतत्वात्कारागृहपतितत्वाद्वा । अन्ये तु केऽपि न पराधीना बभूवुः ॥ वैतालीयं छन्दः ॥

चम्वाजिस्थिरया धरानमननिश्चिन्तस्थितोऽनश्चर-
न्प्रज्ञानस्थिति कर्मजातमवनिस्वामी सुखानां कृते ।
मत्वामा सचिवैरिहत्यमवसि स्थानं सतामर्चितौ
तौ जैनौ चरणौ प्रजाशमकृतौ रत्यास्तुतेन्द्रस्तुतौ ॥ १४५ ॥

चम्वेति ॥ आजिस्थिरया सङ्ग्रामस्थिरया चम्वा सेनया धरानमननिश्चिन्तस्थितो मेदिन्या नमनेन प्रह्वीभवनेन पूर्वं निश्चिन्तः पश्चात्स्थितो अवनिस्वामी भूपतिर्विष्णुः प्रज्ञानस्थिति प्रकृष्टज्ञानेन स्थितिर्यत्र तादृशं कर्मजातं कार्यसमूहम्, अनः प्राणनं सोल्लासं यथा भवति तथा चरन्ननुभवन् सन् सचिवैरमात्यैः अमा सह मत्वा विमृश्य सुखानां कृते करणाय, इहत्यमिहलोकोद्भवम्, अवसि न वासयति तच्छीलम् । संज्ञापूर्वकत्वान्न वृद्धिः । 'वस स्नेहच्छेदापहरणेषु' । अक्षयं सतां सत्पुरुषाणां स्थानमास्पदम् आश्रयणीयं सतां सत्पुरुषाणाम् अर्चितौ पूजितौ । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तप्रत्यये तत्कर्तरि 'क्तस्य च वर्तमाने' इति षष्ठी । सतामित्यस्य मध्यमणिन्यायेनोभयत्र संबन्धः । प्रजा-

शमकृतौ प्रजानां शमं कुरुतस्तथोक्तौ इन्द्रस्तुतौ तौ लोकप्रतीतौ जैनौ जिनदेवसंबन्धिनौ, चरणौ रत्या प्रीत्या अस्तुत स्तुतिं कृतवान् ॥ शार्दूलविक्रीडितं छन्दः ॥

नीत्या यो गुरुणा दिशो दशरथेनोपात्तवान्नन्दनः
श्रीदेव्या वसुदेवतः प्रतिजगन्न्यायस्य मार्गे स्थितः ।
तस्य स्थायिधनंजयस्य कृतितः प्रादुष्षदुच्चैर्यशो
गाम्भीर्यादिगुणापनोदविधिनेवाम्भोनिधींल्लङ्घते ॥ १४६ ॥

इति श्रीधनंजयकविविरचिते धनंजयाङ्के द्विसंधानकाव्ये राघवयादवपाण्डवानां निष्कण्टकराज्यप्राप्तिवर्णनो नामाष्टादशः सर्गः ॥

नीत्येति ॥ यो नन्दनः पुत्रो गुरुणा पित्रा दशरथेन सह प्रतिजगत् प्रतिलोकम् अवतः पालयतो न्यायस्य वसुदे द्रव्यदातरि मार्गे स्थितः सन् श्रीदेव्या श्रिया दीव्यति विलसति तादृशा नीत्या दिश उपात्तवान् गृहीतवान् स्वाधीनीकृतवान् तस्य लक्ष्मणस्य स्थायिधनमनश्वरधनं यशः जयस्य कृतितः करणात् प्रादुष्षत् प्रचुरीभवत् उच्चैरतिशयेन गाम्भीर्यादिगुणापनोदविधिना तदीयगाम्भीर्यादिगुणानामन्यत्रप्रकाशनविधानेनेव तेषामपनोदाय दूरीकरणाय अन्यस्य तादृशगुणवतो मार्गणविधानेनेव वा अम्भोनिधीन्समुद्रान् लङ्घते । आभूमण्डलव्यापि तस्य यश इति भावः ॥ भारतीयपक्षे—यः वसुदेवतः प्रति वसुदेवप्रतिनिधिः श्रीदेव्या शोभया लक्ष्म्या नन्दनः समृद्धो जगन्न्यायस्य लोकनीतेर्मार्गे स्थितः सन् नीत्या गुरुणा महता रथेन च दश दिश उपात्तवान् । तस्य श्रीकृष्णस्य स्थायि स्थिरं धनंजयस्यार्जुनस्य कृतितः कर्मणः [तत्सहायेनैवार्जुनस्य दुःखनिवृत्तेः] प्रादुष्षत् प्रचुरीभवत् यशः इत्यादि समानम् ॥ ग्रन्थकर्तृपक्षे—यः श्रीदेव्या मातुर्नन्दनः पुत्रो वसुदेवतः प्रति वसुदेवस्य पितुः प्रतिनिधिः । जगन्न्यायेऽस्य लोकनीतेर्मार्गे स्थितः सन गुरुणा दशरथेन । [हेतौ तृतीया ।] नीत्या नीतेर्दिश उपदेशान् उपात्तवान् । तस्य धनंजयस्य कवेः कृतितः काव्यकरणतः प्रादुष्षत् स्थायि यशः । अन्यत् सिद्धम् ॥

इति श्री**मथुरा**तः पश्चिमे **पुष्कर**तः पूर्वे **अवन्तिका**त उत्तरे **कुरुक्षेत्र**तो दक्षिणे **मध्यरेखा**तोऽर्धपलधने देशे सकलनगरातिशोभिनि **जयनगरे** वास्तव्येन श्रीमन्महाराजाधिराजश्रीसवाई**रामसिंह**प्रतिष्ठापितश्रीमन्महाराजाधिराजश्रीसवाई**माधवसिंहजी**प्रतिपाल्यमान**जयनगरीय**संस्कृतपाठशालास्थत्रयोदशाध्यापकान्तर्गततामापन्नेन दाधीचवर्यकौत्सगोत्रकुद्दालोपनामकपण्डितवर्य**श्रीराधाकृष्णा**त्मज**साहेबरामा**त्मज**ानन्तरामा**त्मज**छोटीलाला**त्मज**बदरीनाथेन** **विनयचन्द्रा**न्तेवासि**नेमिचन्द्रो**पकल्पितप्राचीन**पदकौमुदी**नामकटीकातो गृहीतसारायां **द्विसंधान**व्याख्यायां राघवपाण्डवयादवानां वैरिरावणकंसजरासंधवधपूर्वकनिष्कण्टकराज्यप्राप्तिकथनो नामाष्टादशः सर्गः

वीर